# shrIbaTukabhairavakavacham



# श्रीबटुकभैरवकवचम्

## Sanskrit Document Information

Text title : Batukabhairavakavacham

File name : baTukabhairavakavacham.itx

Category : shiva, kavacha

Location : doc_shiva

Transliterated by : Madhura Bal madhurabal11 at gmail.com

Proofread by : Madhura Bal madhurabal11 at gmail.com

Description/comments : Bhairavatantra

Latest update : September 28, 2018

Send corrections to : Sanskrit@cheerful.com



September 28, 2018

*sanskritdocuments.org*

# श्रीबटुकभैरवकवचम्



उक्तं च भैरवतन्त्रे ।
महादेव उवाच -
प्रीयतां भैरवो देवो नमो वै भैरवाय च ।
देवेशि देहरक्षार्थं कारणं कथ्यतां ध्रुवम् ॥ १॥

म्रियन्ते साधका येन विना श्मशानभूमिषु ।
रणेषु चाति घोरेषु महामृत्युभयेषु च ॥ २॥

श्रृङ्गीसलीलवज्रेषु ज्वरादिव्याधिवन्हिषु ।
देव्युवाच -
कथयामि श्रृणु प्राज्ञ बटुककवचं शुभम् ॥ ३॥

गोपनीयं प्रयत्नेन मातृकाजारजो यथा ।

ॐ अस्य श्री बटुकभैरवकवचस्य
आनन्दभैरव ऋषिस्त्रिष्टुप्छन्दः
श्रीबटुकभैरवो देवता बं बीजं ह्रीं शक्तिः
ॐ बटुकायेति कीलकं ममाभीष्टसिध्यर्थे जपे विनियोगः ।

ॐ सहस्रारे महाचक्रे कर्पूरधवले गुरुः ॥ ४॥

पातु मां बटुको देवो भैरवः सर्वकर्मसु ।
पूर्वस्यामसिताङ्गो मां दिशि रक्षतु सर्वदा ॥ ५॥

आग्नेयां च रुरुः पातु दक्षिणे चण्डभैरवः ।
नैर्ऋत्यां क्रोधनः पातु उन्मत्तः पातु पश्चिमे ॥ ६॥

वायव्यां मां कपाली च नित्यं पायात्सुरेश्वरः ।
भीषणो भैरवः पातु उत्तरास्यां तु सर्वदा ॥ ७॥

संहारभैरवः पायादीशान्यां च महेश्वरः ।

ऊर्ध्वं पातु विधाता च पाताले नन्दको विभुः ॥ ८॥

सद्योजातस्तु मां पायात्सर्वतो देवसेवितः ।
वामदेवो वनान्ते च वने घोरस्तथाऽवतु ॥ ९॥

जले तत्पुरुषः पातु स्थले ईशान एव च ।
डाकिनीपुत्रकः पातु पुत्रान् में सर्वतः प्रभुः ॥ १०॥

हाकिनी पुत्रकः पातु दारांस्तुलाकिनीसुतः ।
पातु शाकिनिकापुत्रः सैन्यं वै कालभैरवः ॥ ११॥

मालिनीपुत्रकः पातु पशूनश्वान् गजांस्तथा ।
महाकालोऽवतु क्षेत्रं श्रियं मे सर्वतो गिरा ॥ १२॥

वाद्यं वाद्यप्रियः पातु भैरवो नित्यसम्पदा ।
एतत्कवचमीशान तव स्नेहात्प्रकाशितम् ॥ १३॥

नाख्येयं नरलोकेषु सारभूतं सुरप्रियम् ।
यस्मै कस्मै न दातव्यं कवचं सुरदुर्लभम् ॥ १४॥

न देयं परशिष्येभ्यो कृपणेभ्यश्च शङ्कर ।
यो ददाति निषिद्धेभ्यः सर्वभ्रष्टो भवेत्किल ॥ १५॥

अनेन कवचेनैव रक्षां कृत्वा विचक्षणः ।
विचरन्यत्र कुत्रापि न विघ्नैः परिभूयते ॥ १६॥

मन्त्रेण रक्षते योगी कवचं रक्षकं यतः ।
तस्मात्सर्वप्रयत्नेन दुर्लभं पापचेतसाम् ॥ १७॥

भूर्जे रम्भात्वचि वापि लिखित्वा विधिवत्प्रभो ।
कुङ्कुमेनाष्टगन्धेन गोरोचनैश्च केसरैः ॥ १८॥

धारयेत्पाठायेद्वापि सम्पठेद्वापि नित्यशः ।
सम्प्राप्नोति फलं सर्वं नात्र कार्या विचारणा ॥ १९॥

सततं पठ्यते यत्र तत्र भैरवसंस्थितिः ।
न शक्नोमि प्रभावं वै कवचस्यास्य वर्णितुम् ॥ २०॥

नमो भैरवदेवाय सर्वभूताय वै नमः ।
नमस्त्रैलोक्यनाथाय नाथनाथाय वै नमः ॥ २१॥

इति श्रीहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवे धर्मस्कन्धे
उपासनास्तवके श्रीबटुकभैरवोपासनाध्याये भैरव तन्त्रे देवीरहस्योक्तं
श्रीबटुकभैरवकवचनिरूपणं अम्पूर्णम् ॥

Encoded and proofread by Madhura Bal madhurabal11 at gmail.com

---

*shrIbaTukabhairavakavacham*

pdf was typeset on September 28, 2018

Please send corrections to *sanskrit@cheerful.com*

